तेन धृतराष्ट्र प्रति वैराग्यार्थ परुषभाषण । **आश्र०** ३ । ७ ॥

तस्य महाप्रस्थानगमने पतन । **महा० २ । २३ ॥**

तेनाश्वत्थामवधप्रतिज्ञानं । **द्रो० १९८ । २४** ॥

तच्छिरसि अश्वत्थामप्रत्युक्तनारायणास्त्रस्य प्रज्वलन । **द्रो० २००** । ७० ॥

तस्याश्वत्थाम्ना सह युद्ध । **क० १२ ॥**

तस्य विशोकनाम्ना स्वसारथिना सह सवादः । **क०** ८० ॥

तस्य दुश्शासनेन सह विवाद । **क० ८६** । ३६ ॥

२ **भीमसेनः** । देवगन्धर्व । **आ० ६६** । ४२ ॥

३ **भीमसेनः** । क्षत्रिय । सो० व० अनशुष पुत्रस्य परीक्षित पुत्र । तद्भार्या सुकुमारी । तत्पुत्र परिश्रवा । **आ० ६३** । ४५ ॥

४ **भीमसेनः** । पाण्डवपौत्रस्य परीक्षित पुत्रः । जनमेजयस्य भ्राता । **आ० ३ । १** ॥

**भीमा । ( भीमरथी ) । भी० ९ । २२** ॥

**भीष्मः** । गाङ्गेय । तालकेतु' । पितामहः । देवव्रत । शान्तनुपुत्रः । तन्माता गङ्गा । **आ० ६३ । ५० ॥ ६८ । ७५ ॥ वि० ३७ । २ ॥**

तस्योत्पत्ति । **आ० ६४ । १३३** ॥

तस्य यौवराज्येऽभिषेक । **आ० १०७** । ४४ ॥

तस्मै शान्तनुना स्वच्छन्दमरणवरदान । **आ० १०७** । ११९ ॥

तेन महाभारतयुद्धे दश दिनानि युद्धकरण । **आ०** २ । ३० ॥

तेन दाशराजसमीपे भयङ्करप्रतिज्ञाकरण । **आ०** १०७ । ८६ ॥

तेन काशिराजकन्यात्रयहरण । **आ० १०९ । १९** ॥

तस्य साल्वेन सह युद्ध । **आ० १०९** । ३९ ॥

तस्य विलापः पाण्डवाना जतुगृहे दाहवार्ताश्रवणात् । **आ० १६२** । ३० ॥

तेन कर्णाधिक्षेपः । **उ० २१ । १६** ॥

तस्य ध्वजस्तालः । **उ० १५० । ५** ॥

तस्य दुर्योधनेन सैनापत्येऽभिषेकः । **उ० १५६** । २६ ॥

तस्य परशुरामेण सह युद्ध । **उ० १७९—१८५** ॥

तस्य परशुरामेण सह युद्धे रथादध पतन तत्र गङ्गाया आगमन च । **उ० १८२** ॥

तस्य परशुरामेण सह युद्धदिने निशीथे निद्राया दिव्यपुरुषैः प्रस्वापनास्त्रानुस्मारण । **उ० १८३** ॥

तत्पराक्रमवर्णन । **भी० १०९ ॥ ११८** ॥

तत्कृता श्रीकृष्णस्तुति । अस्याः स्तुते भीष्मस्तवराज इति नाम । **शां० ४६** । ३९ ॥

[ तत्कृता श्रीकृष्णस्तुति. । भा० १ । ९ ॥ ]

तद्वधकथा सक्षेपेण । **भी० १३** ॥

तद्वधोपायः । **भी० १०७** ॥

तत्सारथे. सात्यकिना वध । **भी० ५४** । ११४ ॥

तद्वधेच्छया श्रीकृष्णेन चक्रायुधग्रहण । **भी० ५९** । ९१ ॥

तस्यार्जुनेन बाणमयोपधानकल्पन । **भी० १२०** । ४५ ॥

तस्मै पर्जन्यास्त्रप्रयोगेणार्जुनेन पानीयदान । **भी० १२१** । २६ ॥

तेनार्जुनप्रशसनपूर्वक दुर्योधनं प्रति पाण्डवै शमविधानं । **भी० १२१** । ३१–५८ ॥

तस्य शरतल्पगतस्य गान्धार्या वर्णनं । **स्त्री० २३** । १८ ॥

तस्मै पाण्डवादीना धर्मोपदेशोपयोगितया श्रीकृष्णेन शरीरदार्ढ्यदान । **शा० ५१** । १४ ॥

तस्य मरण । **अनु० २७४** । ६ ॥ [ भा० १ । ९ ॥ ]

**भीष्मकः । स० ४** । ३७ ॥ **३२ । १३** ॥

[ विदर्भदेशाधिपतिः । रुक्मिण्याः पिता । तत्पुत्रो रुक्मी । भा० १० । ५२ ॥ ]

+ **भीष्मवधपर्व । भी० ४३—१२२** ॥

१ **भुमन्युः** । क्षत्रिय. । सो० व० जनमेजयपुत्रस्य धृतराष्ट्रस्य पुत्रः । **आ० १०१** । ४७ ॥

२ **भुमन्युः** । क्षत्रिय । सो० व० शाकुन्तलेयस्य भरतस्य पुत्र । तद्भार्या सुवर्णा । तत्पुत्र सुहोत्र. । **आ० ९३** । ३५ ॥ सुवर्णाया. पुष्करिणीति नामान्तर । **आ० १०१** । १३ ॥
तस्य पुत्रा दिविरथः सुहोत्र. सुहोता सुहविः सुयजुः ऋचीकश्चेति षट् । **आ० १०१**।१२॥
[ अय भुमन्यु भरद्वाजस्य रूपान्तर । तस्य वितथ इति नामान्तर । भा० ९ । २० ॥ ]
+ **भूगोलवर्णनं** । **भी० ५–९** ॥ [ भा० ५ । १६–२० ॥ बृहन्नार० ३ ॥ पद्म० १ । ३ –९ ॥ वायु० ३४–५० ॥ विष्णु० २ । २–७ ॥ मत्स्य० १२१ ॥ कूर्म० १ । ४४ –४९ मार्क० ५१–५७ ॥ वराह० ७४–८९ ॥ ब्रह्म० १८–२७ ॥ देवीभा० ८ । ४–१३ ॥ लिङ्गपु० ४६ । गरुडपु० ५४–५७ ॥ शिवपु० उमास० १७—१८ ॥ ]
**भूतकर्ता** । अग्निविशेष । **व० २२४** । १ ॥
**भूतकर्मा** । क्षत्रिय । कौरवपक्षीय. । शतानीकेन हत । **द्रो० २५** । २३ ॥
**भूतशर्मा** । क्षत्रिय. । कौरवपक्षीयः । **द्रो० २०** । ७ ॥
**भूतानि** । पृथिव्यादीनि पञ्च । तेषा सृष्टिः । **शां० ३१९** ॥
तेषा गुणाः । **व० २१९** । ३ ॥ **भी० ५** । ५ ॥ **शां० १९२** । १५ ॥ **२५८** ॥ **२६१** ॥ **अनु० ३९** । १९ ॥ **२४५** । २८ ॥ [ भा० ३ । २६ ॥ ]
**भूतिः** । ऋषि । विश्वामित्रपुत्र. । **अनु० ७** । ५७ ॥
**भूपतिः** । अग्निविशेषः । **व० २२४** । १ ॥
**भूमिः** । पृथिवीभूत । तदभिमानिदेवता च । तया ब्रह्माण प्रति शरणगमन । **आ० ६५** । ३९ ॥
तस्या विष्णुनोद्धरणं । **व० १४४** । २९ ॥
तद्दानफल । **अश्व० १०२** । ९ ॥ **अनु० ९७** । २ ॥ **२३९** । ५१–६६ ॥
तस्या गुणा' । **व० २१९** । ४ ॥ **भी० ४** । ९ ॥ **शां० २६१** । ३ ॥
**भूमिञ्जयः** । क्षत्रिय. । विराटपुत्र उत्तरकुमार । **वि० ३७** । ९ ॥ उत्तरशब्द पश्यत ।
+ **भूमिपर्व** । **भी० ११–१२** ॥
**भूरिः** । क्षत्रिय. । सो० व० पूरुवश्य । सोमदत्तपुत्र । तद्भ्रातरौ भूरिश्रवा शलश्च । **आ० २०१** । १५ ॥ [ भा० ९ । २२ ॥ ]
तस्य सात्यकिना वध । **द्रो० १६७** । १२ ॥
१ **भूरिद्युम्नः** । वीरद्युम्नपुत्रः कश्चन क्षत्रिय । **स० ८** । १९ ॥ **शां० १२७** । १४ ॥
२ **भूरिद्युम्नः** । ऋषिः । **उ० ८२** । २७ ॥
**भूरिबलः** । क्षत्रिय. । सो० व० धृतराष्ट्रपुत्र. । भीमसेनेन हत. । **श० २५** । ५ ॥
**भूरिश्रवाः** । क्षत्रिय । सो० व० सोमदत्तपुत्रः । **आ० २०१** । १५ ॥ रथयूथपयूथपः । **उ० १६५** । २८ ॥ अस्य यूपकेतुरिति नामान्तरं । **द्रो० २५** । ५६ ॥
तद्भ्रातरौ भूरि शलश्च । तस्य सात्यकिना सह युद्ध । **भी० ६३** ॥ **७४** । २७ ॥ **द्रो० १४२** ॥
तत्पुत्राणा सात्यकिना वध. । **भी० ७४** । २५ ॥
तस्य सात्यकिना सह युध्यत सत भुजच्छेदोऽर्जुनेन । **द्रो० १४२** । ८६ ॥
तस्य प्रायोपविष्टस्य शिरश्छेद सात्यकिना । **द्रो० १४३** । ६८ ॥
तच्छववर्णन गान्धार्या । **स्त्री० २४** । १ ॥
**भूलिङ्गशकुनिः** । कुलिङ्गशकुनिशब्द पश्यत ।
**भृगुः** । ब्रह्मर्षि. । ब्रह्मणो हृदयादुत्पन्न । (अयं स्वायंभुवमन्वन्तरीयः । ) तत्पुत्र कवि । तस्यान्य पुत्रश्च्यवन । **आ० ६७** । ४१–४५ ॥
तस्यान्यौ पुत्रौ धाता विधाता च । तत्पुत्री लक्ष्मीः । अत एव सा भार्गवी । **आ० ६७** । ५० ॥ [तत्पत्नी ख्याति. । भा० ४ । १ ॥ विष्णु० १ । १० ॥ ]

[ तद्भार्यायाः शुक्रमातुर्विष्णुना वध. । देवीभा० । ४ । ११ ॥ ]

तस्यैव वैवस्वतमन्वन्तरे द्वितीयवार वरुणस्य क्रतौ पावकाज्जन्म । **आ० ५ । ७ ॥ अनु० १३२ । ३६** ॥ अत एव स वारुणि. ।

तद्भार्या पुलोमा । **आ० ५ । १३ ॥ ६ । १२** ॥

तत्पुत्रा. सप्त । च्यवन. वज्रशीर्ष शुचि' और्व शुक्रः वरेण्य' ( विभु' ) सवनश्चेति । **अनु० १३२ । ४०** ॥

तेनाग्नि प्रति सर्वभक्षत्वशापदान । **आ० ६ । १४ ॥ शा० ४८ । २१** ॥

तेन भरद्वाज प्रति सृष्टिप्रकारकथन । **शां० १८० । ११** ॥

तेन पुष्करास्तैन्ये शपथकरण। **अनु० १४३ । १६**॥

तस्यागस्त्येन सह नहुषस्येन्द्रपदात्पातनविषये सवाद. । **अनु० १५६ । १४** ॥

तद्वशकथन । **आ० ५ । ६** ॥

तद्वश्याना कार्तवीर्यैर्हननं । **आ० १९४ । १९** ॥

**भृगुकच्छः**। नर्मदासागरसगमस्थलस्थः क्षेत्रविशेष । **स० ३२ । ७८** ॥ Broach, on the river Narbada This was the heimittage of the Rishi Bhrigu

**भृगुतीर्थं । व० ९८ । १** ॥

१ **भृगुतुङ्गं । (भृगुतुन्दं)** । क्षेत्र । **आ० ६९। ६०** ॥ **२३५ । २ ॥ व० ८२ । ५१ ॥ अनु० ६४ । १८** ॥

२ **भृगुतुङ्गः । (भृगुतुन्दः)** । पर्वतः । **व० १३२ । १९** ॥

+ **भृत्यलक्षणं । शां० ११९** ॥

**भैमसेनिः** । घटोत्कच. । **भी० ८३ । ३३** ॥

**भैरवः** । सर्प । **आ० ५७ । १७** ॥

१ **भोगवती** । निबन्धनमुनेर्माता । तयोः सवादः। **शा० २०५ । २** ॥

२ **भोगवती** । नागलोकः । **उ० १०३ । १** ॥

**भोगवतीतीर्थं । व० ८३ । ८६** ॥

**भोजः** । तद्देशाधिपति. कृतवर्मा । **आ० २०१ । ६ ॥ द्रो० ११४ । ७८ ॥ ११६ । ३२** ॥

**भोजकटं** । विदर्भदेशान्तर्गत रुक्मिण आवासस्थान । **स० ३२ । १२** ॥ Ellichipur on the river Purna in Berar

+ **भोजनविधिः । अश्व० १०९ । १** ॥

**भोजा** । सौवीरस्य पुत्री । सात्यकेर्भार्या । **द्रो० १० । ३३** ॥

**भोजाः** । देश । **भी० ९ । ४०** ॥

**भौमनः** । विश्वकर्मा । तेनामृतरक्षण । **आ० ३२ । ३** ॥

**भौमेयाः** । जना । **स० ७८ । ९७** ॥

**भ्रमरः** । जयद्रथस्य भ्राता । **व० २६६ । ११** ॥

## म.

**मकरकेतुः** । प्रद्युम्न. । **व० १८ । ११** ॥

**मकरध्वजः** । क्षत्रिय. । सो० व० धृतराष्ट्रस्य पुत्र । भीमसेनेन हत । **भी० ९६ । २७** ॥

**मकरी** । नदी । **भी० ९ । २३** ॥

**मगधाः** । देश । **भी० ९ । ४५** ॥ The Province of Behar Its western boundary was the river Sone The ancient capital of Magadha was sometime Rajgir.

तत्स्था. पञ्च पर्वताः । वैहार' वाराहः वृषभः ऋषिगिरि. (ऋषभकूटः ।) चैत्यकश्चेति । **स० २१ । २** ॥

**मङ्कणकः** । ऋषि । सुकन्याया मातरिश्वनो जातः । **शा० ३९ । ३२ ॥ व० ८१।११६**॥

तस्य पुत्रास्सप्त । वायुवेग वायुबल वायुहा वायुमण्डल. वायुज्वालः वायुरेताः वायुचक्र इति ।

तस्य चरित्र । **शा० ३९ । ३२** ॥ [पद्म० १ । २७ ॥ ६ । १३६ ॥ स्कान्दपु० प्रभासख० प्रथमभा० २७० ॥]

[स कश्यपस्य मानसः पुत्रः । वामनपु० ३८ ॥]

**मङ्किः** । ऋषि । तत्कथा । **शां० १७६ । ४ ॥**

**+ मङ्गलाचरणं** । **आ० १ । १ ॥ २८ ॥**

**मचक्रुकः** । यक्ष । **व० ८१ । २०० ॥**

**मचक्रुकं** । तीर्थं । **श० ५४ । २८ ॥**

**मञ्जुला** । नदी । **भी० ९ । ३४ ॥**

**मणलूरं** । ( **मणिपुरं** ) । पाण्ड्यदेशस्थ अर्जुनश्वशुरस्य चित्रवाहनस्य पत्तन । **आ० ६३ । ८१ ॥ २३५ । १७ ॥**

तत्र तीर्थयात्रानिमित्तेनार्जुनस्य गमन । तत्र स्वपुत्रेण बभ्रुवाहनेन सह युद्ध च । **आ० २३५ ॥**

तत्राश्वमेधाश्वरक्षणार्थमर्जुनस्य गमन । **अश्व० ७९ ॥**

तत्र राजसूयदिग्विजयार्थं सहदेवस्य गमन । **स० ३३ । २९ ॥**

**मणिः** । ऋषिः । **स० ११ । २४ ॥**

**मणिनागं** । क्षेत्र । **व० ८२ । १०६ ॥**

**मणिपुरं** । मणलूरशब्द पश्यत ।

**मणिपुष्पकः** । सहदेवस्य शङ्ख । **भी० २५ । १६ ॥**

**मणिमती** । वातापील्वलपुरी । तस्या दुर्जयेति नामान्तर । **व० ९४ । १–४ ॥**

**मणिमत्तीर्थं** । **व० ८० । १०२ ॥**

**मणिमन्थः** । पर्वत । **अनु० ४९ । ३३ ॥**

१ **मणिमान्** । द्रौपदीस्वयंवरार्थमागत [illegible] क्षत्रिय । **आ० २०१ । ७ ॥**

२ **मणिमान्** । सर्प । **स० ९ । १०** ॥

३ **मणिमान्** । राक्षस । भीमसेनेन हत । **व० १६१ । ६७—८३ ॥**

**मण्डलकः** । सर्प । **आ० ५७ । ८ ॥**

**मण्डलव्यूहः** । कौरवाणा । **भी० ८१ । २१ ।**

**मण्डूककन्या** । सुशोभना नाम । मण्डूकराजस्यायोः पुत्री । **व० १९५ । ३२ ॥** तस्याः पति इक्ष्वाकुवश्य परीक्षिन्नामा । तत्पुत्रा शलो दलो बलश्चेति ।

**मण्डूकराजः** । आयुर्नामा । तत्पुत्री सुशोभना । **व० १९५ । ३२ ॥**

**+ मण्डूकोपाख्यानं** । **व० १९५ ॥**

**मतङ्गः** । ब्रह्मर्षि । ब्राह्मण्या नापिताज्जात । **अनु० ३ । १८ ॥**

तस्य रासभ्या सवाद । **अनु० ३ । ८ ॥**

तेन ब्राह्मण्यप्राप्त्यर्थं तपश्चरण । **अनु० ४ । १ ॥**

**मतङ्गकेदारः** । क्षेत्र । **व० ८३ । १७ ॥**

**मतङ्गाश्रमः** । क्षेत्र । **व० ८२ । १०० ॥**

**मतिः** । दक्षप्रजापते पुत्री । धर्मप्रजापते पत्नी **आ० ६७ । १५ ॥**

**मतिनारः** । क्षत्रियः । सो० व० अनाधृष्टे पुत्रः । तत्पुत्रा तसु महान् अतिरथ द्रुह्युश्च । **आ० ८८ । १२ ॥** अन्त्यनारोप्ययमेवेति भाति ।

**मत्तिसल्लः** । उपरिचरवसुपुत्र । तन्माता गिरिका । **आ० ६४ । ४४ ॥**

**मत्स्यः** । उपरिचरवसुवीर्यान्मत्स्या उदरे जात पुत्र । तस्य स्वसा मत्स्यगन्धा (सत्यवती) । **आ० ६४ । ८३ ॥**

**मत्स्यगन्धा** । सत्यवतीशब्द पश्यत ।

**मत्स्याः** । देश । **भी० ९ । ४० ॥**
Matsya-Desa, the country around Jeypur including Alwar formerly Virata west of Surasena Desa

**+ मत्स्यावतारः** । भगवतो नारायणस्य । **व० १९० ॥** [भा० ८ । २४ ॥]

**+ मत्स्योपाख्यानं** । **व० १९० ॥ शां० १३७ ॥**

**मदः** । च्यवननिर्मित इन्द्रशत्रु । **अनु० २६१ । २६ ॥**

**मदयन्ती** । सू० व० सौदासस्य कल्माषपादस्य पत्नी । **आ० १२८ । ५० ॥ अश्व० ५७ । १९ ॥**

**मदिराक्षः** । ( **मदिराश्वः** ) । विराटस्य भ्राता ।

**वि० ३३** । २० ॥ रथोदारः । **उ० १७१** । १५ ॥

१ **मदिराश्वः** । मदिराक्षशब्द पश्यत ।

२ **मदिराश्वः** । सू० व० दशाश्वस्य पुत्र. क्षत्रिय. । तत्सुतो द्युतिमान् । **अनु० २** । ८ ॥

+ **मद्यं** । तदुत्पत्ति तत्पाने दोषश्च । **अनु० २३१** । २९ ॥

तत्पाननिषेध. । **आ० ७०** । ७२ ॥ तत्पान-प्रायश्चित्त । **शां० १६३** । ४७ ॥

**मद्रराजः** । क्षत्रियः । शल्य. । **आ० १** । २३१ ॥

तस्य व्यासेन सह भगवन्माहात्म्यविषये सवादः । **अनु० १५** ॥

**मद्राः** । देश. । **भी० ९** । ४२ ॥ A country in the Punjab between the Ravi and the Chenab Its capital was Sakala

तेषा निन्दा । **क० ३४** । ३७ ॥

**मद्राधिपः** । क्षत्रियः । शल्यः । **भी० ८५** । १४ ॥

+ **मधुकैटभोत्पत्तिः** । **शां० ३५७** । २४ ॥

तयो कथा । **व० २०६** । २३ ॥ **शां० ३५७** । २४ ॥

तयोर्वधः । **स० ४४** ॥ **शां० ३५७** । ६९ ॥

**मधुच्छन्दाः** । विश्वामित्रस्य पुत्र । **अनु० ७** । ५० ॥

**मधुपर्कः** । गरुडस्य पुत्र । **उ० १०१** । १४ ॥

+ **मधुपर्के गोः समनुज्ञानं** । **आ० ६०** । १४ ॥

**मधुमन्तः** । देशः । **भी० ९** । ५३ ॥

**मधुरा** । शूरसेनदेशस्य राजधानी । श्रीकृष्णस्य जन्मस्थान । **स० १९** । २५ ॥ Muttra the capital of Surasena Desa

**मधुवटी** । देव्याः स्थानं । **व० ८१** । ९४ ॥

**मधुसूदनः** । भगवान्नारायणः । तन्नामनिर्वचन । **उ० ६९** । ४ ॥

**मधुस्रवतीर्थं** । **व० ८१** । १५० ॥

**मध्यदेशः** । देश । **शां० १६७** । ३ ॥

+ **मनः** । आन्तर ज्ञानेन्द्रिय । तस्य गुणाः । **शां० २६१** । ९ ॥

तज्जये सर्वेन्द्रियाणा जयः । **अश्व० ३१** । ५ ॥

तस्य इन्द्रियै' सह विवाद । **अश्व० २३** ॥

**मनस्युः** । क्षत्रिय । सो० व० प्रवीरस्य पुत्रः । तन्माता शूरसेनी । तद्भार्या सौवीरी । तत्पुत्रा. मिश्रकेश्या जाता शक्तः सहनन वाग्मी च । **आ० ८८** । ५ ॥

**मनस्विनी** । देवस्त्री । तत्पुत्रश्चन्द्रमा । **आ० ६७** । १९ ॥

१ **मनुः** । वैवस्वतः । **आ० ६९** । १५ ॥ **अश्व० ४** । २ ॥ तत्पुत्रा इक्ष्वाकुप्रभृतयो दश । **आ० ६९** । २० ॥ [ तत्पत्नी श्रद्धा भा० ९ । १ ॥ ]

तस्य बृहस्पतिना सवाद' । **शां० १९९–२०४** ॥

तस्य सुवर्णनामकेन तपस्विना सह सवाद' पुष्पधूपदीपदानादिविषये । **अनु० १५५** ॥

[ मनवः । चतुर्दश । हरि० १ । ७ ॥ विष्णु० ३ । १ ॥ ब्रह्म० ५ ॥ ब्रह्म० वै० २ । ९३ ॥ मार्कण्डे० ५० ॥ ]

२ **मनुः** । प्राधाया पुत्री । **आ० ६६** । ४५ ॥

३ **मनुः** । अग्निविशेष । **व० २२३** । ४ ॥

**मनोजवतीर्थं** । **व० ८१** । ९३ ॥

**मनोनुगः** । देश. । **भी० १२** । २१ ॥

१ **मनोरमा** । अप्सरा । **आ० ६६** । ५० ॥ **१३२** । ४४ ॥

२ **मनोरमा** । (**मनोहरा**) । सरस्वतीनद्याः काचन शाखा । **श० ३९** । ४ ॥

१ **मनोहरा** । काचन देवस्त्री । तत्पुत्रः शिशिरः प्राणः रमणश्च । **आ० ६७** । २२ ॥

२ **मनोहरा** । द्वितीय मनोरमाशब्दं पश्यत ।

+ **मन्त्रस्य गोपनप्रकारः** । **आ० १५३** । ९३ ॥

**+ मन्त्रपर्व । स० १—१९ ॥**
**+ मन्त्री** । अमात्यशब्द पश्यत ।
**मन्थरा** । कैकेय्या दासी । **व० २७७ । १३ ॥**
**मन्दकाः** । देश । **भी० ९ । ४३ ॥**
**मन्दगा** । नदी । **भी० ९ । ३३ ॥**
**मन्दपालः** । शार्ङ्गकपक्षिरूपवान्कश्चन ऋषि । तद्भार्या जरितानाम शार्ङ्गी । तत्पुत्रा । जरितारि सारिसृक्क. द्रोण. स्तम्बमित्रश्चेति । **आ० २२९ । १५ ॥ अनु० ९३ । २१ ॥** तस्यान्या भार्या लपिता । **आ० २२९ । १८ ॥**
**मन्दरः** । पर्वत । **व० १६४ । ४ ॥**
तेनामृतमथन । **आ० १८ । १ ॥**
तत्र पाण्डवाना गमन । **व० १४४ । २ ॥**
**मन्दवाहिनी** । नदी । **भी० ९ । ३३ ॥**
**मन्दाकिनी** । नदी । **भी० ८३ । ५८ ॥**
**मन्युः** । अग्निविशेष । **व० २२३ । ११ ॥**
**ममता** । अङ्गिर पुत्रस्योचथ्यऋषेर्भार्या । **आ० ११३ । ९ ॥** विशेषमुचथ्यशब्दे पश्यत ।
**मयः** । असुराणा शिल्पी । अर्जुनेन खाण्डवदाहान्मोचित । **आ० २२४ । ३९ ॥**
तेन पाण्डवसभानिर्माण । **स० १ । २५ ॥**
तस्य देवै सह युद्ध । **स० ५१ । ७ ॥**
**+ मयदर्शनपर्व । आ० २२४—२३० ॥**
**मयूरः** । वृषसेनस्य केतु । **द्रो० १०५ । १६ ॥**
**मयूरकेतुः** । स्कन्द । **व० २३३ । ३ ॥**
**+ मरणं** । प्राणवियोग । तत्सूचकान्यरिष्टानि । **शां० ३२२ । ८ ॥ अनु० १५० ॥ १६९ । १ ॥**
तत्प्रभेदा. । **अनु० २४२ ॥**
[ तात्कालिककष्टनिरूपण । भा० ३ । ३० ॥ ]
**१ मरीचिः** । ब्रह्मर्षि । ब्रह्मणो मानस. पुत्र । तत्पुत्र कश्यप. । **आ० ६३ । २ ॥ ६६ । १० ॥ ६७ । ४ ॥ स० ७ । १७ ॥ ११ । १८ ॥ शां० २०७ । ४ ॥**
[ तस्य भार्या कर्दमप्रजापतिपुत्री कला । भा० ४ । १ ॥ ]
[ तस्यान्या भार्या ऊर्णा । तत्पुत्रा षट् । ते ब्रह्मशापात् हिरण्यकशिपो पुत्रा भूत्वा पुन वसुदेवाद्देवक्या श्रीकृष्णोत्पत्ते पूर्वमुत्पन्ना । भा० १० । ८५ ॥ ]
**२ मरीचिः** । अप्सरा । **आ० १२२ । ४४ ॥**
**मरीचिपाः** । ऋषय । **अनु० ४५ । ४१ ॥**
**मरुकाः** । जना. । **स० ७८ । ९७ ॥**
**मरुतः** । एकोनपञ्चाशत् । कश्यपादित्या जाता देवयोनय पुत्रा । **आ० १२२ । ५३ ॥ शा० २०७ । २४ ॥**
[ तेषामुत्पत्ति । भा० ६ । १८ ॥ रा० १ । ४६—४७ ॥ ]
**मरुत्तः** । क्षत्रिय । सू० व० अविक्षित पुत्र । **अश्व० ४ । २३ ॥ स० ७ । १७ ॥ ८ । १० ॥**
तस्य कथा । **द्रो० ५५ । ४६ ॥ शां० २८ । १७ ॥ अश्व० ४ ॥** [रा० ७ । १८ ॥]
[तद्वंशकथन । भा० ९ । २ ॥]
तस्य धृतराष्ट्रेण सवाद । **अश्व० १० । ३ ॥**
तेन यज्ञार्थ सवर्तऋषेरन्वेषण । **अश्व० ६ । २० ॥**
तद्यज्ञ. । **अश्व० ९ । ४ ॥**
**१ मर्यादा** । सो० व० अपराचीनस्य भार्या । तत्पुत्रोऽरिह । **आ० ६३ । १७ ॥**
**२ मर्यादा** । देवातिथिभार्या । तत्पुत्र ऋच । **आ० ६३ । २३ ॥**
**मलजाः । (मलदाः)** । करूशदेशसमीपस्थो देश । **भी० ९ । ४५ ॥** Malada, The western portion of the district of Shahabad
**मलदा** । नदी । **व० ८० । ९३ ॥**
**मलयः** । कुलपर्वत. । **भी० ९ । ११ ॥ ११ । १५ ॥**
**मलयध्वजः** । क्षत्रिय. । मणलूरेश्वर पाण्ड्य । चित्राङ्गदाया पिता । अर्जुनस्य श्वशुर । अस्य

प्रवीर इति चित्रवाहन इति च नामान्तरे। **स० ३३। २९॥ आ० २३५। १७॥** अश्वत्थाम्ना हतः। **क० ५६। ४४॥**

**+ मल्लहननं।** भीमसेनेन। **वि० १५। ५२॥**

**मल्लाः।** देशः। **भी० ९। ४६॥** There are two Malla desa, one is in the west—the Multan The other is in the east—the country in which the Parasnath hills are situated, that is portions of the districts of Hazaribagh and Manbhum

**मसीराः।** देश'। **भी० ९। ५३॥**

**महत्तरः।** अग्निविशेष.। **व० २२२। ९॥**

**+ महत्तत्वनिरूपणं।** **अश्व० ४१। १॥**

**महद्द्युम।** क्षेत्र। **आ० ३। १४२॥**

**महाकर्णिः।** अम्बुवीचस्य मन्त्री। **आ० २२३। १९॥**

**महाकालः।** बाणासुर। **आ० ६६। २१॥**

**+ महाकुललक्षणं।** **उ० ३६। २२॥**

**महागौरी।** नदी। **भी० ९। ३३॥**

**महानदी।** नदी। **आ० २३५। ७॥ भी० ९। १४॥** A river in Orissa.

**महापद्मपुरं।** गोमतीतीरस्थ पत्तन। **शां० ३६३। १॥**

**महापार्श्वः।** असुरः। **स० ९। १६॥**

**महापुरुषस्तवः।** **शां० ३४६॥**

**महाबलिः।** बलिशब्दं पश्यत।

**महाबाहुः।** क्षत्रिय'। सो० व० धृतराष्ट्रपुत्र'। **आ० ६८। ९८॥ १०८॥ १३१। ६॥ १४॥** भीमसेनेन हतः। **द्रो० १५८। १७॥**

**महाभारतं।** भारतशब्द पश्यत।

तच्छब्दनिर्वचनं। **आ० १। २९७—३००॥**

**महाभिषक्।** ( **महाभिषः** )। क्षत्रिय'। सू० व०। **आ० १०२॥**

**महाभूतानि।** भूतशब्दं पश्यत।

**महाभौमः।** क्षत्रियः। सो० व० पूरुवंश्यसारिहस्य पुत्रः। तन्माता आङ्गी। तद्भार्या सुयज्ञा। तत्पुत्र अयुतानायी। **आ० ६३। १८॥**

**महामती।** अङ्गिरसः पुत्री। **व० २२१। ८॥**

**महायज्ञाः।** पञ्च। **अश्व० १०४। ८॥**

**महारवः।** यादव'। **आ० २३९। ११॥**

**महारौरवः।** नरकविशेषः। **अनु० २३०। ९॥**

**महालक्ष्मीः।** लक्ष्मीशब्द पश्यत।

**१ महाशिराः।** असुर'। **स० ९। १८॥**

**२ महाशिराः।** ऋषि'। **स० ४। १६॥**

**महाशोणः।** नद'। **स० २०। २७॥**

**महाश्रमतीर्थं।** **व० ८२। ५४॥**

**महाश्वः।** यमसभास्थ' क्षत्रिय। **स० ८। १९॥**

**महासेनः।** स्कन्दः। **स० ११। ५२॥**

**महाहनुः।** सर्प.। **आ० ५७। १०॥**

**महिष्मती।** अङ्गिरसः पुत्री। **व० २२१। ७॥**

**महीषकाः।** देश। **भी० ९। ५९॥** माहिषकशब्द पश्यत।

**महेन्द्रः।** कुलपर्वत'। **आ० २३५। १३॥ व० ८३। १६॥ भी० ९। ११॥**

Mahendra Mali Hills in Ganjam Dt

तत्र परशुरामस्य वासः। **व० ११८। १४॥**

**महेन्द्रा।** नदी। **भी० ९। २२॥**

**१ महोदरः।** सर्पः। **आ० ३५। १६॥**

**२ महोदरः।** ऋषि। यस्य जङ्घाया सलग्नं पूतिगन्धि राक्षसशिर' औशनसतीर्थस्नानान्मुक्तमभूत्। **श० ४०। २०॥**

**३ महोदरः।** क्षत्रिय'। सो० व० धृतराष्ट्रस्य पुत्रः। **आ० १३१। ७॥ ६८। ९७॥** भीमसेनेन हतः। **भी० ८८। २७॥**

**महौजाः।** क्षत्रियः। **आ० ६८। ५२॥**

**+ मांसभक्षणनिन्दा।** **अनु० १७६। —१७८॥ २३३॥**

तस्य उचथ्येन सवाद । **शां० ९० । ९१ ॥**
[तस्य भार्या शशबिन्दो पुत्री बिन्दुमती । तत्पुत्राः पुरुकुत्स. अम्बरीष मुचुकुन्दश्च । भा० ९ । ६ ॥ वायु० ८८ ॥]
[तस्य पुत्र्यः पञ्चाशत् । सौभरिऋषेर्भार्या । भा० ९ । ६ ॥ विष्णु० ४ । २ ॥]

**मारिषा** । नदी । **भी० ९ । ३६ ॥**

१ **मारीचः** । मरीचिऋषिपुत्रः काश्यप. ।

२ **मारीचः** । ताटकापुत्रो रावणसचिवो राक्षसः । तद्भ्राता सुबाहु । **स० ५० । ५ ॥**
तस्य वधो रामेण । **व० २७९ । २१ ॥**

**मारुतन्तव्यः** । विश्वामित्रस्य पुत्र ऋषिः । **अनु० ७ । ५४ ॥**

**मार्कण्डेयः** । मृकण्डपुत्रो महर्षिः । **व० १३० । ७ ॥ स० ४ । २१ ॥ ११ । २२ ॥**
तस्य पत्नी धूमोर्णा । **अनु० २४८ । ४ ॥**
तस्य चरित्र । **व० १३० । ६ ॥ १९१–१९२ ॥** [भा० १२ । ८–१० ॥ ब्रह्म० ५२–५६ ॥ बृहन्नारदी० ४—५ ॥]
[तस्य वशः । भा० ४ । १ ॥]
तदागमन पाण्डवसमीपे द्वैतवने । **व० २५ । ४ ॥**
तदागमन पाण्डवसमीपे काम्यकवने । **व० १८५ । ४१ ॥**
तस्मै महेश्वरेण दीर्घायुष्प्रदान । **व० १३० । ३२ ॥**
तेन श्रीकृष्णस्य सर्वोत्तमत्वकथनं । **व० १९२ । ५१ ॥**
तस्य नारदेन सह चतुर्युगधर्मविषये सवादः । **अनु० ५४ ॥**
तस्मै श्रीनारायणेन प्रलयप्रदर्शन । **व० १९१ । ९० ॥**
तस्य नारदेन सह स्त्रीणा विषये सवाद । **अनु० ५७ ॥**

**मार्कण्डेयतीर्थं** । **व० ८२ । ७९ ॥**

+ **मार्कण्डेयसमास्यापर्व** । **व० १८४—२३३ ॥**

**मार्कण्डेयाश्रमः** । गोमतीसरयूसगमस्थले विद्यमान क्षेत्र । तत्र पाण्डवाना गमन । **व० १३० । १ ॥** At the confluence of the Saraju and the Gomati, near Bageswara in the district of Kumaun Markanda Rishi performed asceticism at this place

**मार्गणप्रिया** । प्राधापुत्री । **आ० ६६ । ४५ ॥**

+ **मार्गशीर्षादिद्वादशद्वादशीव्रताचरणं** । **अश्व० ११४ । १४ ॥**

+ **मार्जारमूषककथा** । **उ० १६० । १५ ॥ शां० १३८ । १८ ॥**

१ **मार्ताण्डः** । देवगव्याः सुरभ्या भर्ता । **अनु० ११७ । ११ ॥**

२ **मार्ताण्डः** । सूर्यः । **आ० ६९ । १५ ॥**

१ **मार्तिकावतकः** । क्षत्रियः । तन्नामकदेशाधिपः साल्व. । **व० १४ । १६ ॥ २० । १५ ॥ द्रो० ४८ । ८ ॥**

२ **मार्तिकावतकः** । चित्ररथनामा गन्धर्व. । स्त्रीभि सह जले क्रीडन्त य दृष्ट्वा जमदग्निभार्या रेणुका तस्मै स्पृहयाञ्चकार । **व० ११७ । ६ ॥**

**मार्दमर्षिः** । ऋषिः । विश्वामित्रस्य पुत्रः । **अनु० ७ । ५७ ॥**

**मालयः** । गरुडस्य पुत्रः । **उ० १०१ । १४ ॥**

**मालवाः** । देश । **भी० ९ । ६० ॥** Malwa Its capitals were Ujjaini and Dharanagara at the time of Raja Bhoja It is situated in the north-west of Anupadesa.

१ **मालवी** । केकयनाम्नः सूतस्य भार्या । कीचकादीना माता । विराटराजभार्यायाः सुदेष्णाया मातृष्वसा । विमाता च । **वि० २१ । १४ ॥**

२ **मालवी** । अश्वपतेर्भार्या सावित्र्या माता । **व० २९८ । ६१ ॥**

१ **मालिनी** । विभीषणमाता । **व० २७६ । ८ ॥** Malini is the name of a river, which

falls into the river Ghagra (Saraju) fifty miles above Ajodhya The Hermitage of Kanva stands upon it

**२ मालिनी** । अप्सराः । **वि० १४ । ३२** ॥

**३ मालिनी** । कण्वाश्रमसमीपस्था नदी । **आ० ९१ । २३** ॥

**४ मालिनी** । विराटनगरे द्रौपद्या अज्ञातवासे नाम । **वि० १४ । ४५** ॥

**माल्यपिण्डकः** । सर्प । **उ० १०३ । १३** ॥

**माल्यवान्** । पर्वत । **भी० ६ । १३** ॥ **स० २९ । ४५** ॥ **व० १५९ । ३८** ॥ Northern portion of the Eastern Ghats in the Districts of Cuddapa, Kurnool, Nellore, Guntur etc

**मावेल्लकाः** । तन्नामकदेशस्था जना । **द्रो० १७ । २०** ॥

**मासः** । ( **माषः** ) । ऋषभरूपी राक्षसः । यस्य नालेन जरासन्ध. तिस्रो भेरीश्चकार । **स० २१ । २०** ॥

**+ मासनियामकभगवद्रूपाणि** । **अनु० १७१** ॥

**+ मासाहसपक्षी** । कुलिङ्गशकुनिशब्द पश्यत ।

**माहिकाः** । देशः । **भी० ९ । ४६** ॥

**माहिषकाः** । ( **महीषकाः** ) । देशः । **अश्व० ८४ । ११** ॥ ( मैसूर् । भारतभ्रमणपत्रे ११३४ ॥ ) Mysore

**माहिष्मती** । नगरी । यस्या अधिपति कार्तवीर्य· नीलश्च । **स० ३२ । २३** ॥ Maheshwara on the right bank of the Nerbuda forty miles south of Indore

**माहेन्द्रः** । पर्वत । महेन्द्रशब्द पश्यत ।

**माहेयाः** । देशः । **भी० ९ । ४९** ॥

**माहेश्वरज्वरः** । **शां० २८९ । ४** ॥ [ हरि० २ । १२२–१२३ ॥ ]

**माहेश्वरीधारा** । तीर्थं । **व० ८२ । ११७** ॥

**मिञ्जिकः** । रुद्रसभव. । **व० २३१ । १०** ॥

**मिञ्जिका** । रुद्रसभवा । **व० २३१ । १०** ॥

**मित्रः** । द्वादशादित्येष्वन्यतमः । **आ० ६६ । १५** ॥

**+ मित्रं** । सुहृत् । तस्य लक्षण । **शां० ८० । ३** ॥ तस्य स्तुतिः । **शां० १७२ । २०** ॥ तच्छब्दनिर्वचन । **क० ३६ । ३४** ॥

**मित्रज्ञः** । अग्निविशेष । **व० २२२ । १२** ॥

**मित्रदेवः** । क्षत्रिय । त्रैगर्तः । अर्जुनेन हत । **क० १८ । ११** ॥

**मित्रसहः** । कल्माषपादशब्द पश्यत ।

**मित्रधर्मा** । अग्निविशेष । **व० २२२ । १२** ॥

**मित्रवर्धनः** । अग्निविशेष । **व० २२२ । १२** ॥

**मित्रवान्** । अग्निविशेषः । **व० २२२ । १२** ॥

**मिथिलः** । भरतवशोत्पन्नः क्षत्रियः । तत्पुत्र· जह्नु । **अनु० ७ । २** ॥

**मिथिला** । नगरी । **व० २१० । २** ॥ Janakpur The capital of the kingdom of Raj–Janaka Mithila was the name both of the country and the capital

**मिथ्यः** । अग्निविशेष· । **व० २२१ । १९** ॥

**मिश्रकं** । तीर्थं । **व० ८१ । ९१** ॥

**मिश्रकेशी** । अप्सरा । **आ० ६६ । ४९** ॥ **१३२ । ४३** ॥ **स० १० । ११** ॥

तत्पुत्रा· रौद्राश्वाज्जाता अन्वग्भानुप्रभृतय· । **आ० ८८ । ७** ॥

**मुखमण्डिका** । स्कन्दग्रह· । **व० २३० । ३०** ॥

**+ मुखरोगापादकानि कर्माणि** । **अनु० २२० । ७–१३** ॥

**मुचुकुन्दः** । सू० व० मान्धातृपुत्र. क्षत्रियः । तं प्रति भार्गवेण शरणागतरक्षणविषये कपोतोपाख्यानकथन । **शां० १४३ । ६** ॥

तस्य वैश्रवणेन सवाद· । **शा० ७४ । ५** ॥

[तद्भ्रातरौ पुरुकुत्सोम्बरीषश्च । तत्स्वसार सौभरिऋषेर्भार्याः पञ्चाशत् । भा० ९ । ६ ॥ ]

**+ मोक्षधर्मपर्व । शां० १७३–३७५ ।**

**मोदः** । सर्प । **आ० ५७ । ११ ॥**

**मोदागिरिः** । अङ्गदेशस्य पूर्वभागे विद्यमानः पर्वतः । **स० ३१ । २१ ॥** Monghir—Mudgagiri or Mudgallgiri in Bhagalpur District

**मोदापुरं** । उलूकदेशसमीपस्थो देशः । तदधिपौ वामदेव सुदामा च । **स० २८ । ११ ॥**

**मोहिनी** । श्रीमता नारायणेनासुरवञ्चनार्थं धृतं स्त्रीरूपं । **आ० १८ । ५५ ॥** [ भा० ८ । ९—१० ॥ ]

[ तया शङ्करमोहनं । भा० ८ । १२ ॥ ]

**मौञ्जायनः** । ऋषि । **स० ४ । १९ ॥**

१ **मौद्गल्यः** । नालायन्या भर्ता । **आ० २१२ —२१३ ॥**

२ **मौद्गल्यः** । सर्पसत्रे सदस्यः । **आ० ५३ । ९ ॥**

**मौनवेपगः** । सर्प । **आ० ५७ । १७ ॥**

**+ मौसलयुद्धकथा । मौस० ४ ॥** [ भा० ३ । ४ ॥ ११ । ३० ॥]

**+ म्लेच्छभाषा** । तया विदुरेण युधिष्ठिरायोपदेश । **आ० १५७ । २० ॥**

**म्लेच्छाः** । देशः । **भी० ९ । ५७ ॥**

## य.

**यकृल्लोमानः** । देशः । **वि० ६ । ७ ॥ भी० ९ । ४६ ॥**

**यक्षग्रहः । व० २३० । ५३ ॥**

**+ यक्षप्रश्नः** । यक्षरूपिणा यमेन युधिष्ठिरं प्रति कृतः प्रश्नसमुदाय । **व० ३१४ । ४७ ॥**

**यक्षाः** । देवयोनिविशेषाः । तेषा नामानि । **स० १० । १६— १९ ॥**

तेषामगस्त्यशाप । **व० १६२ । ५७ ॥**

**यज्ञः** । याग । अध्वरः । स केन केन कर्तव्यः । **शां० १६३ । ५ ॥**

तत्प्रतिनिधिकर्माणि । **अनु० १६४ । ५ ॥**

तस्य प्रशसा । **अनु० २३७ । १—१० ॥**

तस्याप्राशस्त्य । **शां० २७८ ॥**

तन्मुखो देवाः । पञ्चदश । **व० २२१ । ११–१४ ॥**

**यज्ञदत्तः । ( वज्रदत्तः )** । भगदत्तपुत्रः । तेन सहार्जुनस्य युद्ध । **अश्व० ७५–७६ ॥**

**यज्ञवराहः** । वराहरूपी विष्णु । **स० ४५ । १२ ॥** वाराहशब्द पश्यत ।

**यज्ञसेनः** । द्रुपदः । **आ० ११० । ७ ॥**

१ **यतिः** । क्षत्रिय । सो० व० नहुषस्य पुत्र । ययातेर्भ्राता । बाल्यात्प्रभृतियोगमास्थित । **आ० ६९ । ३३ ॥**

२ **यतिः** । विश्वामित्रऋषेः पुत्रः । **अनु० ७ । ५८ ॥**

३ **+ यतिः** । चतुर्थाश्रमी । सन्यासी । मद्धर्पो । **आ० ८५ । ५ ॥ शां० १९० ॥ २५१ ॥ २८४ ॥**

तन्महिमा । **अश्व० १०८ । १–१० ॥**

तच्छुश्रूषाप्रशसा । **अनु० १४८ ॥ १४९ ॥**

तदाश्रमस्य परमपुरुषार्थसाधनत्व । **अश्व० ४७ ॥**

१ **यदुः** । क्षत्रियः । ययातिपुत्रः । तन्माता देवयानी । **आ० ६३ । ७ ॥**

[ तस्य वंश । भा० ९ । २३ ॥ मत्स्य० ४३ ॥ विष्णु० ४ । ११ ॥ हरि० १ । ३३ ॥ वायु० ९४ ॥ ]

तद्वंशक्षयः मौसलयुद्धे । **मौ० ४ । ३६ ॥** [ भा० ११ । ३० ॥ ]

२ **यदुः** । उपरिचरवसुपुत्रः । **आ० ६४ । ४४॥**

**यमः** । दक्षिणदिक्पालकः । सूर्यपुत्रः । तत्सभावर्णन नारदेन युधिष्ठिर प्रति । **स० ८ ॥**

[ तस्योत्पत्ति । सूर्यात्सज्ञानाम्न्या तद्भार्याया । भा० ६ । ६ ॥ विष्णु० ३ । २ ॥ हरि० १ । ९ ॥ मत्स्य० ११ ॥ पद्म० ५ । ८ ॥ वायु० ८४ ॥ ब्रह्म० ६ ॥ वरा० २० ॥ ]

तस्य माण्डव्येन शाप॰। **आ॰ ११७। १७॥**

तस्य विदुररूपेण जनन। **आ॰ ६४। १३८॥ ११५। ४४॥**

तस्य युधिष्ठिररूपेण जनन। **आ॰ १२९। २०॥**

तस्यागमनमर्जुनसमीपे। **व॰ ४१। ९॥**

तस्य साविव्या सवादः। **व॰ २९८। १०॥**

तस्य गौतमेन सह मातापितृपरिचर्यायास्तद्गणापनयनविषये सवाद। **शा॰ १२९॥**

तेन युधिष्ठिराय वरदान। **व॰ ३१५। १०॥**

**यमकाः**। जना॰। **स॰ ७८। ८८॥**

**यमदूतः**। ऋषि। विश्वामित्रपुत्र। **अनु॰ ७। ५१॥**

+ **यमयातना**। **अनु॰ २२९॥**

+ **यमलोकमार्गः**। **व॰ २०३। ४६–४९॥ अनु॰ २२९॥ अश्व॰ १००॥** [ भा॰ ३। ३०॥ ]

**यमुना**। नदी। **भी॰ ९। १५॥** तस्याः सूर्यपुत्रीत्व सूर्यशब्दे द्रष्टव्य।

तस्या श्रीकृष्णार्जुनयोर्जलक्रीडा। **आ॰ २४८। १७॥**

**यमौ**। नकुलसहदेवौ। **आ॰ २१०। १८॥**

**ययातिः**। नहुषस्य पुत्र। **आ॰ ६३। ५॥ स॰ ८। ८॥ वि॰ ५३। १४॥**

तच्चरित्र सक्षेपण। **आ॰ ६९। ३५॥ द्रो॰ ६३॥ शां॰ २८। ९४॥**

तच्चरित्रं विस्तरेण। **आ॰ ७०—८७॥**

[ तत्कथा। भा॰ ९। १८॥ हरि॰ १। ३०॥ वायु॰ ९३॥ मत्स्य॰ २४–४२॥ रा॰ ७। ५८–५९॥ विष्णु॰ ४। १०॥ ब्रह्म॰ १२॥ ]

तस्य द्वे भार्ये। तयोः प्रथमा शुक्राचार्यपुत्री देवयानी। तस्या विवाहः। **आ॰ ७५। ३९॥** तत्पुत्रौ यदु॰ तुर्वसुश्च। द्वितीया वृषपर्वपुत्री शर्मिष्ठा। तत्पुत्रा द्रुह्यु अनु॰ पूरुश्च। **आ॰ ६३। ७॥**

तत्पुत्री माधवी। **आ॰ ८७। २३॥**

तस्य विश्वाच्या सह रमण। **आ॰ ६९। ५१॥**

तस्य मृगयार्थं गमन। **आ॰ ७२। १५॥ ७५। ४॥**

तस्य देवयान्या सवाद। **आ॰ ७२। २५॥ ७५। १०–३६॥**

तस्मै शुक्राचार्येण शापदानं। **आ॰ ७७। ५२॥**

तेन निजवार्धकेन स्वयौवनविनिमयमनङ्गीकुर्वद्भ्यो यदुप्रभृतिभ्यश्चतुर्भ्य स्वपुत्रेभ्यः शापदान। **आ॰ ७८॥**

तेन स्ववचनकारिणे पूरवे कनिष्ठसूनवे वरदानं। **आ॰ ७८। ३६॥**

तस्य वैराग्यप्राप्ति। **आ॰ ७९। १२॥**

तेन पूरवे पुनर्यौवनप्रत्यर्पण। **आ॰ ७९। १७॥**

तस्य तपोवनगमन। **आ॰ ७९। ४०॥**

तस्य स्वर्गगमनं। **आ॰ ८०॥**

तस्य स्वर्गसुखानुभव। **आ॰ ८१॥**

तस्य स्वर्गात्पतन। **आ॰ ८२। ६॥ उ॰ १२१। १७॥**

तस्याष्टकेन सह सवाद। **आ॰ ८२—८४॥**

तेन गोदानकरण। **व॰ १९८॥**

तत्समीपे एकतश्श्यामकर्णाना हयाना याचनार्थं गालवस्य गमन। तेन गालवाय हयप्रतिनिधितया स्वपुत्र्या माधव्या दान। **उ॰ ११५। १—१५॥**

तेन सरस्वतीतीरे यज्ञकरण। **श॰ ४२। ३३॥**

तत्कृत॰ पुष्करास्तेयशपथ॰। **अनु॰ १४३। २७॥**

**यवक्रीतः**। भरद्वाजनामकस्य कस्यचिद्दषे॰ पुत्रः। **व॰ १३७। १३॥**

तेन स्वस्यानधीतवेदप्रतिभानाय इन्द्रमुद्दिश्य तपश्चरणं। **व॰ १३७। १६॥**

तेन परावसुभार्योपभोग। **व॰ १३८। ५॥**

तस्य हनन परावसुपित्रा रैभ्येण निर्मितया कृत्यया। **व॰ १३८। १९॥**

तस्य पुनरुज्जीवन । **व० १४० । २३ ॥**

**यवक्षा ।** नदी । **भी० ९ । ३० ॥**

**यवनः ।** श्रीकृष्णेन हत । **व० १२ । ३३ ॥**
कालयवनशब्द पश्यत ।

**यवनाः ।** देशः । **भी० ९ । ६५ ॥**

**यशोदा ।** सो० वं० हस्तिनो भार्या । तत्पुत्रो विकुञ्जन (विकुण्ठन) । **आ० ६३ । ३७ ॥**

**यशोधरः ।** दुर्मुखनामकस्य पाञ्चालस्य पुत्रः । **द्रो० १८५ । ५ ॥**

**याजः ।** यमुनातीरवासिनः काश्यपगोत्रोत्पन्नस्य कस्यचिदृषे. पुत्र. । तद्भ्राता उपयाज. । **आ० १४९ । ८ ॥ १८१ । २२ ॥**

तेन द्रुपदस्य पुत्रोत्पत्त्यर्थं याजन । **आ० १८१ । ३२ ॥**

**याज्ञवल्क्यः ।** उपनिषत्सु प्रसिद्ध प्रथममहायुगीयवैशपायनस्य शिष्यो भागिनेयश्च ब्रह्मर्षि । **स० ४ । १८ ॥ स० ७ । १२ ॥**

[ स ब्रह्मणोऽङ्गात्समुत्पन्नः । वायु० ६० ॥ ब्रह्मरातस्य पुत्र । वैशपायनस्य शिष्य । विष्णु० ३ । ५ ॥]

[तस्य वैशपायनाद्वेदाध्ययनादि । भा० १२ । ६ ॥]

तस्य सूर्याद्विद्याभ्यासः । **शां० ३२३ ॥** [भा० १२ । ६ ॥ विष्णु० ३ । ५ ॥ ]

[ तेन जनकयज्ञे वादे ब्राह्मणाञ्जित्वा ब्रह्मोद्यग्रहण शाकल्यमारण च । वायु० ६० ॥ ]

तस्य जनकेन सह सवाद. । **शा० ३१६–३२३ ॥**

तस्य विश्वावसुनामकगन्धर्वेण सवादः । **शां० ३२३ । २६ ॥**

**याज्ञसेनिः ।** क्षत्रियः । धृष्टद्युम्नः । **भी० ११२ । १९ ॥**

**यामुनाः ।** देशः । **भी० ९ । ५१ ॥**

**यायावराः ।** जरत्कारोर्वंशकर्तार ऋषयः । **आ० १३ । १८ ॥ ४५ । १६ ॥**

**युगन्धरः ।** सात्यकेः पुत्रः । द्रोणेन हतः । **द्रो० १६ । ४२ ॥**

+ **युगानि ।** चत्वारि । कृत त्रेता द्वापरः कलिश्चेति । तद्धर्मनिरूपण । **व० १५१ । ११ ॥ भी० १० ॥ शां० ६९ ॥** [ मत्स्य० १४२ –१४४ ॥ भा० १२ । ३ ॥ हरि० १ । ८ ॥ गरुडपु० २२३ ॥ ]

+ **युद्धं ।** आयोधन । तद्धर्मा. । **शां० ९५ ॥ अनु० २१४ । २२ ॥**

तस्य धर्म्यत्वसमर्थन । **शां० ९७ ॥**

तस्य दुष्टत्वं । **उ० २७ । ३ ॥**

**युधामन्युः ।** क्षत्रियः । पाञ्चाल्य । **उ० १९६ । ३ ॥** रथोदार । **उ० १६९ । ३ ॥** तस्य युद्ध । **द्रो० १३० । २९ ॥** अश्वत्थाम्ना हत । **सौ० ८ । ४३ ॥**

**युधिष्ठिरः ।** अजातशत्रुः । धर्मपुत्रः । धर्मराज । पाण्डुपुत्र । यमात्कुन्त्या जातः । **आ० ६३ । ६५ ॥** रथोदार । **उ० १६९ । ३ ॥**
तस्योत्पत्तिः । **आ० १२९ । १२ ॥**

तज्जननकालीनग्रहस्थितिः । **आ० १२९ । २१ ॥**

तस्य मुख्या भार्या द्रौपदी । तत्पुत्रः प्रतिविन्ध्यः । **आ० ६४ । १६५ ॥ ६८ । १५७ ॥**

तस्यान्या भार्या शैब्या देवकी । तत्पुत्रो यौधेयः । **आ० ६३ । ७५ ॥**

तस्य यौवराज्येऽभिषेक । **आ० १५१ । १ ॥**

तस्यार्धराज्याभिषेकः । **आ० २२७ । २० ॥**

तस्य पट्टाभिषेकः । **शां० ३९ ॥**

तस्य सताप बकसमीपे भीमसेनस्य प्रेषणविषये । **आ० १७६ । ८ ॥**

तेन द्रौपदीस्वयवरे दुर्योधनपराजयः । **आ० २०५ । ४० ॥**

तस्य इन्द्रप्रस्थे नूतनसभाप्रवेशः । **स० ४ । ७ ॥**

तस्य राजसूयः । **स० ३८ ॥** [ भा० १० । ७४ ॥ ]

तस्य शकुनिना सहाक्षद्यूत । **स० ८५ । ९ ॥**

तस्य वनवासार्थं प्रस्थान । **व० १ ॥**

तेनान्नप्राप्त्यर्थं सूर्यस्तुतिः । **व० ३ । १६ ॥**

तस्य सूर्यादक्षयपात्रप्राप्तिः। व० ३। ५२॥
तस्य दुर्योधनहननपूर्वकं राज्यस्वीकारविषये द्रौपद्या सह विवादः। व० २७-३२॥
तस्य व्यासात्प्रतिस्मृतिनामकविद्याप्राप्तिः। व० ३६। ३०॥
तस्य सकाशे बृहदश्वस्य वासः। व० ४९-७७॥
तस्य बृहदश्वादक्षहृदयप्राप्तिः। व० ७७। २३॥
तस्य सकाशे वने नारदस्य वासः। व० ७९-८३॥
तस्मै धौम्यऋषिणा नानाविधतीर्थक्षेत्रमाहात्म्यकथनम्। व० ८४-८८॥
तस्य लोमशेन सह तीर्थयात्रा। व० ८९-१४४॥
तत्समीपे वने इन्द्रस्यागमनं जयाशीश्शसनपूर्वकं स्वर्गं प्रति गमनं च। व० १६७॥
तेन अजगरकृतप्रश्नानामुत्तरदानम्। व० १८२। १८॥
तस्य मार्कण्डेयेन सह वने वासः। व० १८९—२१९॥ [ पद्म० १। ४०-४९॥ ]
तेन यक्षकृतप्रश्नानामुत्तरदानम्। व० ३१४। ४७—१२४॥
तस्य विराटनगरे प्रसिद्धं नाम कङ्क इति। वि० २। २३॥ तत्र प्रच्छन्नं नाम जय इति। वि० ७। ६६॥
तेन दुर्गास्तवः। वि० ८॥
तेन सुशर्मगृहीतविराटमोचनार्थं भीमसेनचोदना। वि० ३५। १५॥
तस्य विराटेन सह देवने तेनाक्षैर्नासाया उपरि प्रहारः। वि० ७०। ३७॥
तेन दुर्योधनं प्रति ग्रामपञ्चकप्रार्थना। उ० ३१। १७॥
तस्य कुरुसेनादर्शनेन विषादः। भी० २१॥
तेन युद्धारम्भकाले भीष्मादिभ्यो जयाशीर्ग्रहणम्। भी० ४३॥
तस्य जीवग्राहग्रहणप्रतिज्ञा द्रोणाचार्येण। द्रो० १२। २४॥
तस्य द्रोणाचार्येण सह युद्धम्। द्रो० १०६॥
तेन द्रोणसमीपे 'अश्वत्थामा मृत' इति कथनम्। द्रो० १९१। ५४॥
तस्य पराजयपूर्वकमपहासः कर्णेन। क० ४४॥
तेनार्जुनगर्हणं कर्णो नाद्यापि हत इति। क० ७१॥
तत्कृतगर्हणामसहमानेनार्जुनेन तद्वधोद्यमः। क० ७२॥
तस्यार्जुनेनाधिक्षेपः तद्वधप्रतिनिधितया। क० ७३॥
तेन भग्नसक्थिकस्य दुर्योधनस्य परिसान्त्वनम्। शा० ६०। २१॥
तेनाश्वत्थाममणिधारणम्। सौ० १६। ३१॥
तस्य कुनखीभवनं गान्धार्या दृष्टिपातेन। स्त्री० १५। ७॥
तस्य निर्वेदः। शां० ९॥
तं प्रति तद्भ्रातृभिर्द्रौपद्या च प्रजापालनविधानम्। शां० १०—१८॥
तं प्रति देवस्थाननामकऋषिवाक्यम्। शां० २०॥
तस्य हास्तिनपुरप्रवेशः। शां० ३६। ४२॥
तस्मै कुन्त्या कर्णस्य स्वपुत्रत्वाभिधानपूर्वकं तस्योदककरणविधानम्। स्त्री० २७। ७॥
तेन कुन्त्या पूर्वमेव कर्णस्य स्वाग्रजत्वाकथनरुषा सर्वासामपि स्त्रीणां मनसि किमपि गोप्यं न स्यादिति शापदानम्। शा० ६। ११॥
तस्य बृहस्पतिना सहाध्यात्मविषये संवादः। अनु० १७३॥
तस्य बन्धुनिधनदुःखाद्वनं यियासोः श्रीकृष्णेन व्यासेन च परिसान्त्वनम्। अश्व० २॥
तस्मै व्यासेन बन्धुवधसंभाविताशेषपापापनोदनायाश्वमेधकरणविधानम्। अश्व० ३॥
तेनाश्वमेधकरणम्। अश्व० ८९॥
[ तेनाश्वमेधत्रयकरणम्। भा० १। १२॥ ]
तस्याश्वमेधार्थं धनानयनाय हिमवद्गिरिगमनम्। अश्व० ६४॥
तस्य राज्यपालनप्रकारः। आश्र० १॥

तस्मै वन यियासता धृतराष्ट्रेण राजनीत्युपदेश. । **आश्र० ६—८ ॥**

तेन वनस्थधृतराष्ट्रादिदिदृक्षया वने शतयूपाश्रमगमन । **आ० २४-२५ ॥**

तेन कुन्त्या उदकदान । **आश्र० ४१ । १८ ॥**

तेन परीक्षिदादीना राज्येऽभिषेक. । **महा० १ । ७ ॥**

तस्य स्वर्गगमन । **महा० ३ । २५ ॥**

तस्य स्वर्गे बन्धुजनदिदृक्षोर्देवदूतेन नरकप्रदर्शन । **स्वर्गा० २ । १४ ॥**

तेन गङ्गायामवगाहनेन मानुषशरीरत्याग. । **स्वर्गा० ३ । ४२ ॥**

१ **युयुत्सुः** । धृतराष्ट्रस्य वैश्यायां जातः पुत्र' । **आ० ६४ । १६२ ॥ २०१ । २ ॥**

तस्य कौरवपक्षात्पाण्डवपक्षप्रवेश. । **भी० ४३ । १०२ ॥**

तेन पाण्डवपक्षे स्थित्वा उलूकेन सह युद्ध । **क० १६ ॥**

२ **युयुत्सुः** । क्षत्रिय । सो० व० धृतराष्ट्रस्य गान्धार्यां जात. पुत्रः । **आ० ६८ । ९३ ॥ १३१ । २ ॥**

**युयुधानः** । सात्यकि ।

**युवनाश्वः** । क्षत्रिय. । सू० व० आर्द्रस्य पुत्र' । मान्धातुः पिता । **व० १२७ । ६ ॥**

तस्यान्य पुत्र. श्रावस्त. । **व० २०५ । ३ ॥** [ भा० ९ । ६ ॥ ]

**यूपकेतुः । ( यूपध्वजः )** । क्षत्रिय. । सो० व० सोमदत्तपुत्र । **द्रो० २५ । ५६ ॥** भूरिश्रव-शब्द पश्यत ।

+ **योगः** । चित्तवृत्तिनिरोध' । तन्निरूपण । **शां० ३०६ ॥ ३११ ॥ अनु० २४६ ॥** [ भा० ३ । २८ ॥ ]

**योजनगन्धा** । दाशपुत्री व्यासमाता । सत्यवती-शब्द पश्यत ।

+ **योधलक्षणं । शां० १०१ ॥**

**योनिद्वारं** । क्षेत्रविशेष । **व० ८२** । ९४ ॥

+ **योषित्** । स्त्रीशब्द पश्यत ।

**यौधेयः** । क्षत्रिय । सो० व० युधिष्ठिरस्य पुत्रः । तन्माता देवकी । **आ० ६३ । ७५ ॥**

## र.

**रक्षिता** । अप्सरा । **आ० ६६ । ५० ॥**

+ **रक्षोब्राह्मणसंवादः । अनु० १८७ ॥**

**रघुः** । क्षत्रिय. । सू० व० । **वि० ५३ । १६ ॥** [खट्वाङ्गस्य पौत्र । तस्य वश । भा० ९ । १० ॥]

**रजताश्वः** । शैनेय । सात्यकि. । **द्रो० २३ । ३ ॥**

**रजिः** । क्षत्रिय । सू० व० आयोः पुत्र । तन्माता स्वर्भानवी । तद्भ्रातर । नहुष. वृद्धशर्मा गय. अनेना. इति चत्वारः । **आ० ६९ । २८ ॥** [तस्य चरित्रं । हरि० १ । २८ ॥ भा० ९ । १७ ॥]

**रता** । काचन देवस्त्री । तत्पुत्र अहः । **आ० ६७ । २० ॥**

१ **रतिः** । कामस्य भार्या । **आ० ६७ । ३३ ॥** [ तस्या. दक्षप्रजापतिस्वेदादुत्पत्तिः । कालिकापु० ३ ॥ शिवपु० सतीख० ४ ॥ ]

२ **रतिः** । अप्सरा. । **अनु० ५०** । ४८ ॥

**रथचित्रा** । नदी । **भी० ९** । २६ ॥

+ **रथध्वजादिवर्णनं । उ० ५६ ॥ द्रो० १०५ ॥**

**रथध्वानः** । अग्निविशेषः । **व० २२१ । १८ ॥**

**रथन्तरः** । अग्निविशेषः । **व० २२२ । १९ ॥**

**रथन्तरी** । इलिलस्य भार्या । तत्पुत्राः दुष्यन्तादय. पञ्च । **आ० ६३ । २९ ॥** तेषा नामानि । दुष्यन्त' शूरः भीम प्रवसुः वसुः इति । **आ० ८८ । १६ ॥**

**रथप्रभुः** । अग्निविशेष । **व० २२१ । १८ ॥**

**रथवाहनः** । विराटस्य भ्राता । **द्रो० १५९ ।४१॥**

**रथसेनः** । क्षत्रिय. । पाण्डवपक्षीय. । **द्रो० २३ । ६३ ॥**

तत्र ऋत्विजा नामानि । स० ३६ । ३२ ॥
तस्य प्रशसा । स० १२ ॥ ७१ ॥ ७८ ॥ ७९ ॥
तत्सभाया दुर्योधनस्य पतन । स० ७४ । ६ ॥
तत्करणार्थं दुर्योधनस्य यत्न । व० २५६ । ६ ॥
तत्करण हरिश्चन्द्रेण । स० १२ । १६ ॥
**+ राजसूयपर्व । स० ३६—३८ ॥**
**+ रात्रियुद्धारम्भः । द्रो० १५३॥** तत्समाप्तिः । **द्रो० १८७ ॥**
**राधा ।** सूतराजस्याधिरथस्य भार्या । कर्णस्य माता । **आ० ६८ । १४० ॥ व० ३१० । २ ॥**
**राधेयः ।** कर्ण॰ । **आ० २०५ । २६ ॥**
१ **रामः ।** श्रीमन्नारायणावतारभूत॰ क्षत्रिय । सू० व० दशरथस्य पुत्रः । तन्माता कौसल्या । **व० २७५ । ८ ॥**
तदवतारकथा । **स० ५० ॥ व० १४९ । ३१ ॥ १५० ॥** [भा० ९ । १०—११ ॥ पद्म० ६ । २६९—२७१ ॥ वायु० ८८ ॥]
तस्योपाख्यान । **व० २७५ ॥ द्रो० ५९ ॥ शां० २८ । ५१ ॥**
तेन परशुरामतेजोहरण । **व० ९८ । ७ ॥**
तस्य यौवराज्याभिषेकोद्यमः । **व० २७८ । ७ ॥**
तस्य वनगमन । **व० २७८ । ३० ॥ २८१ । ११ ॥**
तेन रावणवध । **स० ५० । २३ ॥ व० २९१ । २९ ॥ द्रो० ५९ । ७ ॥**
तस्य पट्टाभिषेकः । **व० २९२ । ६७ ॥**
तत्कथा हनुमता भीमसेन प्रति प्रोक्ता । **व० १४९ । ३१ ॥**
२ **रामः ।** परशुरामः ।
३ **रामः ।** बलराम॰ ।
**रामतीर्थ । व० ८२ । ७२ ॥ ८३ । १६ ॥ श० ५० । ७ ॥**
**रामह्रदः ।** तीर्थ । **व० ८१ । २६ ॥**
Rama-hrada A sacred tank near Thaneswar, where Parasurama is said to have given oblations to the names of his ancestors after destroying the Kshatriyas
**+ रामोपाख्यानपर्व । व० २७४—२९३ ॥**
**रावणः ।** विश्रवस पुत्रो राक्षसाधिपः । तन्माता पुष्पोत्कटा । तस्योत्पत्ति॰ । **व० २७६ । ७ ॥**
तस्य कार्तवीर्येण बन्धन । **स० ९६ । ४३ ॥**
तस्य ब्रह्मणो वरप्राप्तिः । **व० २७६ । १५ ॥**
तेन सीतापहार॰ । **व० २७९ । ४४ ॥**
तस्य वध श्रीरामेण । **स० ५० । २३ ॥ व० २९१ । २९ ॥ द्रो० ५९ । ७ ॥**
**+ राष्ट्रगुप्तिप्रकारः । शां० ८७ ॥**
**+ रासभीमतङ्गसंवादः । अनु० ३ ॥**
**राहुः ।** सिहिकापुत्र॰ । नवग्रहेष्वन्यतमः । **आ० ६६ । ३१ ॥ स० ११ । २९ ॥ भी० १२ । ३९ ॥**
तच्छिरश्छेद । **आ० १९ । ७ ॥**
**रिष्टः ।** क्षत्रियः । **स० ८ । १५ ॥**
१ **रुक्मरथः ।** मद्रराजस्य शल्यस्य पुत्र॰ । तस्य भ्रातर एकोनशत । **आ० २०१ । १४ ॥ भी० ४७ । ४८ ॥**
तस्य सर्वभ्रातृसहितस्याभिमन्युना वधः । **द्रो० ४५ । १३ ॥** सहदेवेन वध इति । **क० २ । २९ ॥**
२ **रुक्मरथः ।** द्रोणाचार्यः । **द्रो० १३ । २३॥**
**रुक्माङ्गदः ।** शल्यस्य पुत्र॰ । **आ० २०१ । १४॥**
**रुक्मिणी ।** विदर्भराजस्य भीष्मकस्य पुत्री । श्रीकृष्णस्य प्रथमा भार्या । तद्भ्राता रुक्मी ।
ता प्रति महालक्ष्म्या स्वनिवासयोग्यस्थलकथनं । **अनु० ३२ ॥**
तस्या अग्निप्रवेशः । **मौ० ८ । ७४ ॥**
[तस्या॰ स्वयवरस्थाया श्रीकृष्णेन हरण । भा० १० । ५३ ॥ हरि० २ । ५९ ॥ विष्णु० ५ । २६ ॥]

वसु॰ विश्वावसु. परशुरामश्च । **व० ११७ । ११** ॥

**रुरुः** । ऋषि. । प्रमते पुत्र. । तन्माता घृताची अप्सराः । तद्भार्या प्रमद्वरा । तत्पुत्र शुनक । **आ० ८ । २** ॥ **५८ । ३१** ॥ **अनु० ८ । ६५** ॥

तस्य विवाह । **आ० ९ । २४** ॥

तस्य डुण्डुभेन सवादः । **आ० १०–१२** ॥

**रुशङ्गुः** । उशङ्गुशब्द पश्यत ।

**रुषद्गुः** । क्षत्रिय । **स० ८ । १३** ॥

**रूपवाहिकाः** । देशः । **भी० ९ । ४३** ॥

१ **रेणुकः** । अमृतरक्षको देव । **आ० ३२ । १८** ॥

२ **रेणुकः** । कश्चिद्गज. । **अनु० १९५ । ४** ॥

**रेणुका** । जमदग्निभार्या । प्रसेनजिन्नामकनृपसुता । **व० ११७ । २** ॥ पद्मादुत्पन्ना अयोनिजा । **अनु० ५३ । २७** ॥ तस्मात्प्रसेनजित् तस्या. पोषकः पितेति भाति ।

[इयमिक्ष्वाकुवश्यस्य रेणोः पुत्री । भा० ९ । १५ ॥ हरि० १ । २७ ॥ ]

[ इय सुवेणो पुत्री । अस्याः कामलीति नामान्तर । वायु० ९१ ॥ ]

तस्या. स्त्रीभि. सह जलक्रीडा कुर्वतश्चित्ररथनामकगन्धर्वराजस्य दर्शनेन कामविकारोत्पत्ति. । **व० ११७ । ७** ॥ [ भा० ९ । १६ ॥ ]

तच्छिरश्छेदः । तत्पातिव्रत्यभङ्गरुष्टजमदग्निप्रेरितेन परशुरामेण । **व० ११७ । १५** ॥ [ भा० ९ । १६ ॥ ]

तस्याः शिरःपादस्य सूर्यातपेन संतापे भृगुणा छत्रोपानन्निर्माण । **अनु० १४४** ॥

**रेणुकातीर्थं** । **व० ८० । ८३** ॥ In the Punjab, about 16 miles north of Nahan

**रेणुमती** । ( **करेणुमती** ) । नकुलभार्या शिशुपालपुत्री । तत्पुत्रो निरमित्र. । **आ० ६३ । ७८** ॥

**रेवती** । स्कन्दग्रह॰ । **व० २३० । २९** ॥

**रेवतीसुतः** । स्कन्दः । **व० २३३ । ६** ॥

**रैभ्यः** । विश्वामित्रपुत्रः । **शां० ४८ । ५७** ॥ **स० ४ । २२** ॥

स भरद्वाजस्य सखा । तत्पुत्रौ अर्वावसुपरावसू । **व० १३७** ॥ **१२–१३** ॥

तदाश्रमगमन युधिष्ठिरस्य । **व० १३७ । ९** ॥

तस्य हनन तत्पुत्रेण परावसुना मृगभ्रान्त्या । **व० १४० । ६** ॥

तस्य पुनरुज्जीवन । **व० १४० । २०–२३** ॥

१ **रैवतः** । स्कन्दग्रह॰ । **व० २३० । २९** ॥

२ **रैवतः** । द्वारकासमीपस्थ॰ पर्वतः । **आ० २१९ । १२** ॥

तत्र श्रीकृष्णस्य गमन । **अश्व० ५९ । ४** ॥

तत्रार्जुनस्य गमन । **आ० २१८ । २** ॥

**रैवतकः** । पर्वत । **भी० ११ । १८** ॥ Mount Girnaur near Junagar in Guzerat, north of Prabhasa–Somnath

+ **रोगापादकानि कर्माणि** । **अनु० २२०–२२१** ॥

१ **रोचमानः** । उरगापुर्या अधिपति । अर्जुनेन राजसूयदिग्विजये पराजितः । **स० २८ । १९** ॥

२ **रोचमानः** । अश्वमेधपुरीश्वरः । क्षत्रिय. । चैद्यः । **आ० ६८ । १८** ॥ **२०१ । १०** ॥ भीमसेनेन राजसूयदिग्विजये पराजितः । **स० ३० । ८** ॥ पाण्डवपक्षीय. । **उ० १७२ । १** ॥ कर्णेन हत । **क० ५१ । ५०** ॥ तत्पुत्रो हेमवर्णः । **द्रो० २३ । ६८** ॥

**रोमपादः** । लोमपादशब्द पश्यत ।

**रोमहर्षणः** । पौराणिकः सूतः । तत्पुत्र उग्रश्रवा । **आ० १ । ५** ॥ **स० ४ । १८** ॥

[ तस्य वधो बलरामेण । भा० १० । ७८ ॥ ]

**रोहिणः** । रौहिणशब्द पश्यत ।

१ **रोहिणी**। सुरभ्या पुत्री। तदपत्यानि गाव। **आ० ६७**। ६७–६८॥

२ **रोहिणी**। दक्षप्रजापतिपुत्री नक्षत्ररूपिणी चन्द्रभार्या। **शा० ३६**। ५॥

३ **रोहिणी**। वसुदेवभार्या। तत्पुत्रो बलराम। **मौ० ८**। १८॥

**रोही**। नदी। **भी० ९**। ३०॥ In Afganistan It was also called Roha

**रोहीतकः**। देश। **स० ३५**। ४॥ Rohtak, forty-two miles north west of Delhi

तद्विजयः कर्णेन। **व० २५५**। २०॥

**रौद्रकर्मा**। क्षत्रिय। सो० व० धृतराष्ट्रस्य पुत्र। **आ० ६८**। १०४॥ **१३१**। १२॥ भीमसेनेन हत। **द्रो० १२७**। ४४॥

**रौद्राश्वः**। क्षत्रिय। सो० व० पूरो पुत्र। तन्माता पौष्टी। तद्भ्रातरौ प्रवीर ईश्वरश्च। तत्पुत्रा ऋचेयुप्रभृतयो दश मिश्रकेशीनाम्न्याम-प्सरसि जाता। **आ० ८८**। ४—११॥

**रौमहर्षणिः**। उग्रश्रवा.। **आ० १**। ११॥

**रौरवः**। नरक। **अनु० २०३**। ३॥

**रौहिणः**। देववटवृक्षः। **आ० २९**। ४५॥

तस्य परिमाण। **आ० ३०**। २३॥

तच्छाखाभङ्गो गरुडेन। **आ० २९**। ४८॥

## ल.

१ **लक्षणा**। दुष्यन्तस्य प्रथमा भार्या। **आ० ८८**। १८॥ तस्या लाक्षीति नामान्तरं। तत्पुत्रो जनमेजय.। **आ० ६३**। ३०॥

२ **लक्षणा**। दुर्योधनपुत्री। लक्ष्मणाशब्द पश्यत।

३ **लक्षणा**। अप्सरा। **आ० १३२**। ४४॥

४ **लक्षणा**। मद्राधिपस्य पुत्री श्रीकृष्णमहिषी। **स० ५७**। २८॥

१ **लक्ष्मणः**। क्षत्रिय.। सू० वं० दशरथपुत्रः। तन्माता सुमित्रा। तद्भ्राता शत्रुघ्न। **स० ८**। १८॥ **५०**। १०॥ **व० २७५**। ८॥

तेनेन्द्रजिद्वध। **व० २९०**। २४॥

२ **लक्ष्मणः**। क्षत्रिय। सो० व० धार्तराष्ट्रस्य दुर्योधनस्य पुत्र। रथसत्तम। **उ० १६६**। १४॥

तस्याभिमन्युना सह युद्ध। **भी० ५५**। ८॥

तस्याभिमन्युना पराजय। **भी० ७३**। ३२–३८॥

तस्य वधोऽभिमन्युना। **द्रो० ४६**। १८॥

तच्छववर्णन। **स्त्री० २०**। ३४॥

१ **लक्ष्मीः**। महालक्ष्मी।

२ **लक्ष्मीः**। दक्षप्रजापतिपुत्री। धर्मप्रजापतिभार्या। **आ० ६७**। १४॥

**लक्ष्यवेधः**। अर्जुनेन। द्रोणाचार्यकृतास्त्रविद्याप-रीक्षाया। **आ० १४३**। ९॥ द्रौपदीस्वयंवरे तेनैव। **आ० २०३**। २५॥ [ श्रीकृष्णेन। भा० १०। ८३॥ ]

**लङ्का**। राक्षसराजधानी। **व० २८१**। ४२॥ तत्र युधिष्ठिरराजसूयार्थे करादानाय घटोत्कचस्य गमन। **स० ३४**॥ Ceylon

**लज्जा**। दक्षप्रजापतिपुत्री धर्मप्रजापतिभार्या। **आ० ६७**। १५॥ तस्या ह्रीरिति नामान्तर।

**लता**। अप्सरा। शापेन ग्राहत्व प्राप्ता। अर्जुनेन मोचिता। **आ० २३६**। २०॥

**लपिता**। मन्दपालस्योपभार्या शार्ङ्गी। जरितायाः सपत्नी। **आ० २५५**। १७॥

**लपेटिका**। तीर्थं। **व० ८३**। १५॥

**लम्बकाः**। ( **लम्पाकाः**। ) देश। **द्रो० १२१**। ४६॥ Lamghan on the northern bank of the Kabul river

**लवणासुरः**। मधुदानवपुत्र। **आ० २७**। २२॥

तस्य वध शत्रुघ्नेन। **स० ५०**। २७॥

**लाक्षी**। दुष्यन्तभार्या। तस्या लक्षणेति नामान्तरं। तत्पुत्रो जनमेजय। **आ० ६३**। ३०॥ **८८**। १८॥

**लाङ्गली** । नदी । **स०** ९ । २६ ॥
**लिखितः** । शङ्खस्य भ्राता । ऋषि. । **स०** ७ । ११ ॥ **शां०** २३ । १८ ॥
+ **लिङ्गार्चनफलं** । **अनु०** २४७ ॥
**लीलाढ्यः** । ऋषि । विश्वामित्रपुत्र । **अनु०** ७ । ५३ ॥
**लुब्धकः** । अर्जुनकनामा किरातः । तस्य गौतमी-मृत्युसर्पै सवाद. । **अनु०** १ । २२ ॥ ३६ । ६३ ॥
**लेवलिका** । नदी । **व०** ८२ । १६३ ॥
**लोकोद्धारं** । तीर्थं । **व०** ८१ । ४५ ॥
**लोपामुद्रा** । विदर्भराजदुहिता । अगस्त्यमहर्षे पत्नी । तस्या उत्पत्ति । **व०** ९४ । २४ ॥
तस्याः सत्यवतीति नामान्तर । **व०** ९४ । २९॥
तस्या विवाहः । **व०** ९५ । ७ ॥
तस्या दृढस्युनामकपुत्रोत्पत्तिः । **व०** ९७ । ३१ ॥
+ **लोभः** । दुष्टो गुण । तन्निन्दा । **शां०** १६१ ॥
+ **लोभादिजयोपायः** । **शां०** १५६ ॥
**लोमपादः** । सो० व० अनो. कुलोत्पन्नस्याङ्गराजस्य वशीय' । दशरथस्य सखा । **व०** १११ । १९ ॥
[ तस्य दशरथ इति नामान्तरं । हरि० १ । ३१ ॥ २ । ९३ ॥ ]
तस्य राज्ये अनावृष्टिः । **व०** १११ । ७ ॥
तस्य पुत्री शान्ता । ऋश्यशृङ्गमहर्षेर्भार्या । **व०** ११४ । ११ ॥ अधिक शान्ताशब्दे द्रष्टव्य ।
तस्य राज्ये ऋश्यशृङ्गमहर्षेरागमनेन वृष्टिप्रादुर्भावः । **व०** ११४ । १० ॥
**लोमशः** । ऋषि । तस्य युधिष्ठिरसमीपे वने आगमन । **व०** ४५ ॥ ८९ । १ ॥
तेन धर्मरहस्यकथन । **अनु०** १९२ ॥
+ **लोमशतीर्थयात्रा** । **व०** ९१—१५७ ॥
**लोमहर्षणः** । रोमहर्षणशब्दं पश्यत ।

१ **लोहिताक्षः** । सूतः । जनमेजयसर्पसत्रे स्थपति । **आ०** ५१ । १५ ॥ ५६ । ६ ॥ ५८ । १२॥
२ **लोहिताक्षः** । स्कन्दपार्षद । **श०** ४६ । २४॥
**लोहिताश्वः** । ( **रोहिताश्वः** ) । हरिश्चन्द्रपुत्र' । **व०** ७७ । ३१ ॥
**लौहितारणिः** । नदी । **भी०** ९ । १८ ॥
१ **लौहित्यः** । समुद्र । **आ०** २ । ३६७ ॥ **महा०** १ । ३४ ॥
२ **लौहित्यः** । नद । **स०** ९ । २६ ॥
A portion of the river Brahmaputra north of Pragjyotishapura
**लौहित्यतीर्थं** । **व०** ८३ । २ ॥
**लौहित्या** । नदी । **भी०** ९ । ३५ ॥

## व.

**वंशगुल्मतीर्थं** । **व०** ८३ । ९ ॥ A sacred Reservoir ( kund ) on the table land of Amarakantaka which is situated, about four miles and a half from the source or the first fall of the Nerbuda
**वंशमूलतीर्थं** । **व०** ८१ । ४१ ॥
**वंशा** । प्राधायाः पुत्री । **आ०** ६६ । ४५ ॥
**वक्रः** । करूशदेशाधिपतिर्दन्तवक्र. । **स०** १४ । १२ ॥
**वक्रद्वारः** । पर्वतः । **शां०** ३२५ । १८४ ॥
**वक्षोग्रीवः** । ऋषि' । विश्वामित्रऋषिपुत्रः । **अनु०** ७ । ५३ ॥
**वङ्गः** । क्षत्रिय' । बलिराजपुत्रः । तन्मातरि सुदेष्णाया दीर्घतमस ऋषेर्जात. । **आ०** ११३ । ५३ ॥
**वङ्गाः** । देशः । **भी०** ९ । ४६ ॥ The Province of Bengal
१ **वज्रः** । क्षत्रिय' । श्रीकृष्णस्य पौत्रः । **मौ०** ८ । ३९ ॥
तस्य राज्याभिषेकः । **मौ०** ८ । ७३ ॥
२ **वज्रः** । ऋषि. । विश्वामित्रस्य पुत्रः । **अनु०** ७ । ५२ ॥

**वज्रविष्कम्भः** । गरुडपुत्र । उ० १०१ ।१०॥
**वज्रव्यूहः** । पाण्डवाना । भी० १९ । ३५ ॥ ८१ । २३ ॥
**वटेश्वरपुरं** । व० ८२ । १२९ ॥
**वत्सः** । प्रतर्दनस्य पुत्र ।, परशुरामेण हतेषु क्षत्रियेषु गोवत्सै सवर्धितत्वादुर्वेरित । शां० ४८ । ८६ ॥ [ दिवोदासस्य पौत्र । तस्य भ्राता गर्ग' । वायु० ९२ ॥ ]
**वत्सनाभः** । महर्षि । तच्चरित्र । अनु० ३३ ॥
**वत्सराजः** । आ० २०१ । २२ ॥
**वदान्यः** । ऋषि । तद्दुहिता सुप्रभा अष्टावक्रऋषेर्भार्या । अनु० ५० । ११ ॥
+ **वधप्रतिनिधित्वमधिक्षेपस्य** । क० ७२ । ८१—८६ ॥
**वधूसरा** । नदी । रुदन्त्या भृगुभार्याया पुलोमाया अश्रुबिन्दुभ्य उत्पन्ना । आ० ६ । ८ ॥
**वध्राः** । देश । भी० ९ । ५५ ॥
१ **वनायुः** । ( **वनायवः** ) । देश । भी० ९ । ५६ ॥ Arabia
२ **वनायुः** । दनो पुत्र. । आ० ६६ । ३० ॥
३ **वनायुः** । क्षत्रिय । पुरूरवस पुत्र । आ० ६९ । २८ ॥
**वनेयुः** । क्षत्रिय । रौद्राश्वपुत्र । आ० ८८ । ९ ॥
**वन्दना** । नदी । भी० ९ । १८ ॥
**वन्दी** । वरुणस्य पुत्र । व० १३६ । २४ ॥
**वपुष्टमा** । पाण्डवप्रपौत्रस्य जनमेजयस्य भार्या । काशिराजस्य सुवर्णवर्मण' पुत्री । आ० ४४ । ८ ॥
**वयस्यः** । अङ्गिरस. पुत्र । ऋषि । अनु० १३२ । ४२ ॥
**वरदानतीर्थं** । यत्र दुर्वाससा विष्णवे वरो दत्त । व० ८० । ६५ ॥ Baroda where Rishi Durvasa gave a boon to Vishnu
**वरा** । नदी । भी० ९ । २६ ॥
**वराङ्गी** । त्रिशङ्को पुत्री शय्यातेर्भार्या । तत्पुत्रोऽहयाति । आ० ६३ । १३ ॥
**वराणसी** । नदी । भी० ९ । ३१ ॥
१ **वराहः** । ऋषि । स० ४ । २३ ॥
२ **वराहः** । भगवतो नारायणस्य मत्स्यादिषु तृतीयोऽवतार । स० ४५ । ४ ॥ व० १४४ । २९ ॥ २७३ । ५३ ॥ शां० २०८ । २१ ॥ [ भा० ३ । १३ ॥ वायु० ६ ॥ पद्म० ६ । २६४ ॥ लिङ्गपु० ९४ ॥ ]
तेनात्मपिण्डदान । शां० ३५५ । १४ ॥
**वराहकः** । सर्प. । आ० ५७ । १८ ॥
**वराहकर्णः** । यक्ष. । स० १० । १७ ॥
**वराहतीर्थं** । पुण्यतीर्थ । व० ८१ । १८ ॥
तस्य कोकामुखमिति नामान्तर ।
**वराहध्वजः** । जयद्रथ । द्रो० १०५ । २० ॥
१ **वरुणः** । देवगन्धर्व । आ० ६६ । ४२ ॥
२ **वरुणः** । द्वादशादित्येष्वन्यतम । आ० ६६ । १५ ॥
३ **वरुणः** । पश्चिमदिगीश्वर । स० ९ । १ ॥
तस्य भार्या ऋद्धि । स० १० । ६ ॥
तस्यान्या भार्या वारुणी । तस्या गौरीति नामान्तर । स० ९ । ६ ॥
तस्यान्या भार्या शुक्राचार्यपुत्री ज्येष्ठा देवी । तत्पुत्रा. बल मद्याभिमानिनी सुरा अधर्मश्च । आ० ६७ । ५२—५३ ॥
तस्यान्य पुत्र. पुष्कर । उ० ९८ । १२ ॥
तस्यान्य पुत्रो बन्दी । यो जनकराजसभाया कहोलादीन्ब्राह्मणान्वादे विजितवान् । व० १३६ । २४ ॥
तत्सभावर्णन नारदेन युधिष्ठिर प्रति । स० ९ ॥
तल्लोकवर्णन । उ० ९८ । १०—२५ ॥
तस्यार्जुनसमीपे आगमनमस्त्रदान च । व० ४१ । ५ ॥ २९ ॥

तेन उचथ्यभार्याया भद्राया अपहार. । **अनु० २५९ । १३ ॥**

तस्य जलाधिपत्येऽभिषेक । **शा० ४८ । ११ ॥**

तेन सीताया निर्दुष्टत्वकथन । **व० २९२ । २९ ॥**

**वर्गा** । शापेन ग्राहत्व प्राप्ताऽप्सरा: । **आ० २३६ । १५ ॥ स० १० । १३ ॥**

**वर्चा:** । सोमस्य पुत्र । **आ० ६७ । २२ ॥**

तस्य भूमावभिमन्युत्वेनावतार । **आ० ६८ । ११२ ॥**

**वर्ण:** । ब्राह्मणक्षत्रियवैश्यशूद्रा इति चतुर्विध: । चातुर्वर्ण्यशब्द पश्यत ।

**वर्धमानपुरं** । प्रतिष्ठानपुर। **आ०** ९६ । ६८ ॥

**वलल:** । विराटनगरे अज्ञातवासे सूदवेषधारिणो भीमसेनस्य नाम । **वि० ३ । ८ ॥**

**वल्लवा:** । देश: । बल्लवशब्द पश्यत ।

**वसातय:** । बाह्लीकदेशसमीपस्थो देश । **स० ७८ । ५ ॥**

**वसिष्ठ:** । ( **वशिष्ठ:** ) । ब्रह्मणो मानस: पुत्र. । तद्भार्या अरुन्धती । तत्पुत्र शक्ति । **आ० १८९ । १९ ॥ १९० । ५ ॥ स० ११ । १९ ॥**

[ तस्योत्पत्ति । उर्वशीपुत्रत्व मित्रावरुणपुत्रत्व च । भा० ६ । १८ ॥ ९ । १३ ॥ ]

तस्य वरुणपुत्रत्व । **आ० १०६ । ५ ॥**

तन्नामनिर्वचन । **आ० १९० । ६ ॥ अनु० १४२ । २७ ॥**

तस्योपाख्यान । **आ० १९०—१९८ ॥**

तदाश्रमदाह: कार्तवीर्यार्जुनेन । तेन तस्मै शापदान च । **शां० ४८ । ४० ॥ ४२ ॥**

तस्य विश्वामित्रेण सह वैरं । **आ० १९१ ॥**

तेनेक्ष्वाकूणा पौरोहित्यकरणं । **आ० १९० । १२ ॥**

तस्य व्याघ्रयोन्या पुत्रोत्पत्ति । **अनु० ५३ । ३० ॥**

तस्य करालजनकेन सवाद: । **शां० ३८–३१३ ॥**

तेनेन्द्रस्य रक्षण । **अनु० २६० । २५ ॥**

तस्य परशुरामेण सवाद । **अनु० १३० । ३८ ॥**

तस्य सौदासेन कल्माषपादेन गोमहिमविषये सवाद: । **अनु० ११३ ॥**

**वसिष्ठपर्वत:** । तत्रार्जुनस्य तीर्थयात्रार्थे गमन । **आ० २३५ । २ ॥**

**वसिष्ठापवाहतीर्थं** । **शा० ४३ । १ ॥**

१ **वसु:** । जमदग्निपुत्र. । ऋषि । **व० ११७ । ११ ॥**

२ **वसु:** । उपरिचरवसु: । **आ० ६४ । २ ॥**

३ **वसु:** । अष्टवसुशब्द पश्यत ।

**वसुतेया:** । जना. । **स० ७८ । ९० ॥**

**वसुदा** । ( **वसुधा** । **सुभा** ) । अङ्गिरसो भार्या । **व० २२१ । १ ॥**

१ **वसुदान:** । क्षत्रिय. । पाञ्चाल्य. । **स० ४ । ३३ ॥** अतिरथ । **उ० १७१ । २७ ॥** द्रोणेन हत. । **द्रो० २१ । ५५ ॥**

२ **वसुदान:** । क्षत्रिय । काश्य । **द्रो० १९१ । २९ ॥ क० ३ । ३७ ॥**

३ **वसुदान:** । क्षत्रिय । पासुदेशाधिप: । **स० ७८ । १०६ ॥**

**वसुदेव:** । श्रीकृष्णस्य पिता कुन्त्या भ्राता । शूरराजस्य यादवस्य पुत्र । **स० २३ । ३ ॥** [ भा० १० । १ ॥ ]

[ तेन यज्ञकरण । भा० १० । ८४ ॥ ]

[ तस्य भार्या पुत्राश्च । भा० ९ । २४ ॥ हरि० १ । ३५ ॥ ]

[ तस्य कथा । वायु० ९६ ॥ ब्रह्म० १४ ॥ ]

तस्य सपत्नीकस्य शरीरत्याग । **मौ० ८ । १५–२४ ॥**

१ **वसुमना:** । क्षत्रिय. । हर्यश्वस्य पुत्र. । अस्य वसुमानिति नामान्तर । तन्माता ययातिपुत्री माधवी । **व० २०१ । २ ॥ स० ८ । १३ ॥ वि० ५३ । १३ ॥ उ० ११६ । २३ ॥**

